मूढोऽहंत्वांकथंजानेमोहितस्तवमायया । प्रसीदपूजयिष्यामियथाविभवविस्तरैः
पुत्रं वित्तं च मे देहि त्राहि मां शरणागतम् ॥ ६३ ॥
श्रुत्वाभक्तियुतंवाक्यं परितुष्टोजनार्दनः । वरं चवाञ्छितंदत्त्वा तत्रैवान्तरधीयत
ततोऽसौनावमारुह्यदृष्ट्वारत्नादिपूरिताम् । कृपयासत्यदेवस्य यत्फलंवाञ्छितं मम
इत्युक्त्वा स्वजनैः सार्धं पूजां कृत्वा यथाविधि ।
हर्षेण महतासाधुः प्रयाणं चाकरोद् द्विजाः ॥ ६६ ॥
नावं संयोज्य वेगेन स्वदेशमगमत्तदा ॥ ६७ ॥
ततोजामातरंप्राहपश्यवत्स! पुरीं मम । दूतं च प्रेषयामास निजवित्तस्य रक्षकम्
ततोऽसौ नगरं गत्वा साधुभार्यां विलोक्य च ।
उवाच वाञ्छितं वाक्यं नत्वा बद्धाञ्जलिस्तदा ॥ ६९ ॥
निकटे नगरस्यैव जामात्रासहितोवणिक् । आगतो बन्धुवर्गैश्चधनैर्बहुविधैस्तथा
श्रुत्वादूतमुखाद्वाक्यं महाहर्षयुतासती । सत्यपूजांततःकृत्वाप्रोवाच तनुजांप्रति
व्रजामि शीघ्रमागच्छ साधुसन्दर्शनाय च ॥ ७१ ॥
इतिमातृवचःश्रुत्वाव्रतंकृत्वासमाप्यच । प्रसादंसम्परित्यज्यगतासा च पतिं प्रति
तेनरुष्टःसत्यदेवो भर्त्तारंतरणीं तथा । संहृत्य च धनैः सार्द्धं जलेतस्मिन्समार्जयत्
ततः कलावती कन्यानालोक्यवणिजंपतिम् । शोकेनमहतातत्ररुदन्तीचापतद्भुवि
दृष्ट्वा तथाविधां कन्यां नष्टदृष्ट्वातत्पतिंतरीम् । भयेनमहतासाधुःकिमाश्चर्यमिदंमहत्
विचिन्तयन्तस्ते सर्वे बभूवुस्तरिवाहकाः ॥ ७६ ॥
ततोलीलावतीसाध्वीदृष्ट्वातद्विह्वलासती ।विललापातिदुःखेनभर्त्तारञ्चेदमब्रवीत्
इदानीं नौकयासार्द्धमदृश्योऽभूदलक्षितः । न जानेकेन दैवेन हेलयावाऽपहारितम्
सत्यदेवस्य माहात्म्यं किं ज्ञातुं नहि शक्यते ।
इत्युक्त्वा विललापाऽथ तत्रस्था स्वजनैः सह ।
ततो लीलावती कन्यां क्रोडे कृत्वा रुरोद च ॥ ७९ ॥
ततःकलावतीकन्यानष्टेस्वामिनिदुःखिता । गृहीत्वापादुकां तस्यअनुगन्तुंमनोदधे

कन्यायाश्चरितं दृष्ट्वा सभार्य्यः स्वजनो ( सज्जनो ) वणिक्।
अतिशोकेन सन्तप्तश्चिन्तयामास धर्म्मवित् ॥ ८१ ॥
हृतोहिसत्यदेवेनजामातासत्यमायया। सत्यपूजांकरिष्यामियथाविभवविस्तरैः
इति सर्वान्समाहूय कथयित्वा मनोरथम् ॥ ८३ ॥
ननाम दण्डवद् भूमौ सत्यदेवं पुनः पुनः।
ततस्तुष्टः सत्यदेवो गगनाद्वणिजम्प्रति । जगाद वचनञ्चेदं नैवेद्यमवमन्य च ॥
आगता स्वामिनं द्रष्टुमतोऽदृश्योऽभवत्प्रभुः ॥ ८५ ॥
गृहं गत्वा प्रसादञ्च भुक्त्वा चायातु सा पुनः।
लब्धभर्तृसुखा साधो ! भविष्यति नसंशयः ॥ ८६ ॥
ततः साप्राणदेवाक्यंश्रुत्वागगनमण्डलात्। क्षिप्रंतदागृहंगत्वाप्रसादं प्रतिभुज्यच
अपश्यत्पुनरागत्य पतिं नावं जनैः सह ॥ ८७ ॥
ततःकलावतीतुष्टाजगादपितरम्प्रति। एहि तात! गृहं यामो विलम्बं कुरुषे कथम्
तच्छ्रुत्वा कन्यका वाक्य सन्तुष्टोऽभूद्वणिक् सुतः ॥ ८९ ॥
पूजनं सत्यदेवस्य कृत्वाविधिविधानतः। धनैर्बन्धुगणैःसार्द्धंजगाम निजमन्दिरम्
पौर्णमास्याञ्च सङ्क्रान्त्यां पूजां कृत्वा यथाविधि।
इह लोके सुखी भूत्वा चान्ते सत्यपुरं ययौ ॥ ९० ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चमेऽवन्तीखण्डे रेवाखण्डे श्रीसत्यनारायणकथायां वणिक्साधुमोक्षवर्णनंनाम पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५ ॥

---

# षट्त्रिंशदधिकद्विशततमोऽध्यायः

## वंशध्वजवृत्तान्तवर्णनम्

### सूत उवाच

अथ चान्यत्प्रवक्ष्यामि शृणुध्वं मुनिसत्तमाः !।
ासीद्वंशध्वजोराजा प्रजापालनतत्परः । प्रसादंसत्यदेवस्यत्यक्त्वादुःखमवापसः
एकदा स वनं गत्वा हत्वा च विविधान् मृगान् ।
आगत्य वटमूले च दृष्ट्वा सत्यस्य पूजनम् ॥ २ ॥
गोपाः कुर्वन्ति सन्तुष्टा भक्तियुक्ताः सबान्धवाः ।
राजा दृष्ट्वा तु दर्पेण नागत्य न ननाम सः ॥ ३ ॥
ोगोपगणाःसर्व्वेंप्रसादंनृपसन्निधौ ।संस्थाप्यपुनरागत्यभुक्त्वासर्वेंयथेप्सितम्
ततः प्रसादं सन्त्यज्य राजादुःखमवापसः ॥ ५ ॥
स्यपुत्रशतंनष्टं धनधान्यादिकञ्चयत् । सत्यदेवेन तत्सर्वं नाशितं मम निश्चितम्
तस्तत्रैवगच्छामियत्रदेवस्य पूजनम् । मनसेतिविनिश्चत्यययौगोपालसन्निधिम्
ततोऽसौ सत्यदेवस्य पूजां गोपगणैःसह ।
भक्तिश्रद्धान्वितो भूत्वा चकार विधिवन्नृपः ॥ ८ ॥
त्यदेवप्रसादेनधनपुत्रान्वितोऽभवत् । इहलोके सुखीभूत्वा चान्तेविष्णुपुरं ययौ
इदं कुरुतेसत्यव्रतं परमदुर्लभम् । शृणोति च कथां पुण्यां भुक्तिमुक्तिफलप्रदाम्
धान्यादिकंतस्य भवेत्सत्यप्रसादतः । दरिद्रो लभतेवित्तंबद्धो मुच्येतबन्धनात्
तोभयात्प्रमुच्येत सत्यमेतन्नसंशयः । ईप्सितञ्चफलंभुक्त्वा चान्तेसत्यपुरं व्रजेत्
इति वः कथितं विप्राः! सत्यनारायणव्रतम् ।
यत्कृत्वा सर्वदुःखेभ्यो मुक्तोभवति मानवः ॥ १३ ॥
ेषतः कलियुगेसत्यपूजा महाफला । सत्यनारायणं केचित् सत्यदेवंतथा परे

नानारूपधरोभूत्वा सर्व्वेषामीप्सितप्रदः। भविष्यतिकलौसत्यव्रतरूपीसनातनः
य इदं पठतेनित्यंश्रृणोतिमुनिसत्तमाः। तस्यनश्यन्तिपापानि सत्यदेवप्रसादतः॥

इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायांपञ्चमेऽवन्तीखण्डे-रेवाखण्डे सत्यनारायणकथायांवंशध्वजचरित्रवर्णनंनामषट्त्रिंशदधिक-द्विशततमोऽध्यायः॥ २३६ ॥

---

शुभम्भूयात्

---

* 'सत्यइत्येव वा केचित् प्रवदन्ति मनीषिणः।' इतिपुस्तकान्तरसम्मतो-ऽधिकः पाठः।

